# सरस्वती स्तोत्रम्

## श्री गणेशाय नमः

### । ध्यानम् ।

द्योर्भिर्युक्ताश्चतुर्भिः स्फटिकमणिमयीमक्षमालां दधना ,
हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चापरेण ।
या सा कुन्देन्दुशङ्खस्फटिकमणिनिभा भासमाना समाना ,
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥ १॥
आरूढा श्वेतहंसे भ्रमति च गगने दक्षिणे चाक्षसूत्रं ,
वामे हस्ते च दिव्याम्बरकनकमयं पुस्तकं ज्ञानगम्या ।
सा वीणां वादयन्ती स्वकरकरजपैः शास्त्रविज्ञानशब्दैः ,
क्रीडन्ती दिव्यरूपा करकमलधरा भारती सुप्रसन्ना ॥२॥
श्वेतपद्मासना देवी श्वेतगन्धानुलेपना ,
अर्चिता मुनिभिः सर्वैर्ऋर्षिभिः स्तुयते सदा ,
एवं ध्यात्वा सदा देवीं वाञ्छितं लभते नरः ॥३॥
ॐ अस्य श्रीसरस्वतीस्तोत्रमन्त्रस्य मार्कण्डेय ऋषिः स्रग्धरा अनुटुप् छन्दः मम वागविलास सिद्ध्यर्थं तथा श्रीसरस्वती देवीताप्रित्यार्थे धर्मार्थकाम मोक्षा सिद्ध्यर्थं पाठे विनियोगः ॥
शुक्लां ब्रह्मविचारसारपरमामाद्यां जगद्व्यापिनीं ,
वीणापुस्तकधारिणींमभयदां जाड्यान्धकारापहाम् ।
हस्ते स्फाटिकमालिकां विदधतीं पद्मासने सस्थितां ,
वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदा शारदाम् ॥४॥
या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता ,

या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना ।
या ब्रह्माच्युतशंकरप्रभितिभिर्देवैः सदा वन्दिता ,
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥५॥
ह्रीं ह्रीं ह्रिद्यैकबीजे शशिरचिकमले कल्पविस्पष्टशोभे ,
भव्ये भव्यानुकूले कुमतिवनदवे विश्ववन्द्यांघ्रिपद्मे ।
पद्मे पद्मोपविष्टे प्रणतजनमनोमोदसंपादयित्रि ,
प्रोत्फुल्लज्ञानकूटे हरिनिजदयिते देवि संसारसारे ॥६॥
ऐं ऐं ऐं दृष्टमन्त्रे कमलभवमुखांभोजभूते स्वरूपे ,
रूपारूपप्रकाशे सकलगुणमये निर्गुणे निर्विकारे ।
न स्थूले नैव सूक्ष्मेऽप्यविदितविभवे नापि विज्ञानतत्वे ,
विश्वे विश्वान्तरात्मे सुरवरनमिते निष्कले वित्यशुद्धे ॥७॥
ह्रीं ह्रीं ह्रीं जाप्यतुष्टे हिमरूचि मुकुटे वल्लकीव्यग्रहस्ते ,
मातर्मातर्नमस्ते दह दह जडतां देहि बुद्धिं प्रशस्ताम् ।
विद्ये वेदान्तवेद्ये परिणतपठिते मोक्षदे मुक्तिमार्गे ,
मार्गातीतस्वरूपे भव मम वरदा शारदे शुभ्रहारे ॥८॥
धीं धीं धीं धारणाख्ये धृतिमतिनतिभिर्नामभिः कीर्तनीये ,
नित्येऽनित्ये निमित्ते मुनिगणनमिते नूतने वै पुराणे ।
पुण्ये पुण्यप्रवाहे हरिहरनमिते नित्यशुद्धे सुवर्णे ,
मातर्मात्रार्धतत्वे मतिमतिमतिदे माधवप्रीतिमोदे ॥९॥
ह्रूं ह्रूं ह्रूं स्वस्वरूपे दह दह दुरितं पुस्तक व्यग्रहस्ते ,
सन्तुष्टाकारचिते स्मितमुखि सुभगे जृम्भिणि स्तम्भविद्ये ॥
मोहे मुग्धप्रवाहे कुरू मम विमतिध्वान्तविध्वंसमीडे ,
गीर्गौर्वाग्भारति त्वं कविवररसनासिद्धिदे सिद्धिसाध्ये ॥१०॥

स्तौमि त्वां त्वां च वन्दे मम खलु रसनां नो कदाचित्त्यजेथा ,
मा मे बुद्धिर्विरूद्धा भवतु नच मनो देवि मे यातु पापम् ॥
मा मे दु:खं कदचित् क्वचिदपि विषयेऽप्यस्तु मे नाकुलत्वं ,
शास्त्रे वादे कवित्वे प्रसरतु मम धीर्मास्तु कुण्ठा कदापि ॥११॥
इत्येतैः श्लोकमुख्यैःप्रतिदिनमुषसि स्तौति यो भक्तिनम्रो ,
वाणी वाचस्पतेरप्यविदितविभवो वाक्पटुर्मुक्तकण्ठः ।
स स्यादिष्टार्थलाभैः सुतमिव सततं पाति तं सा च देवी ,
सौभाग्यं तस्य लोके प्रभवति कविता विघ्नमस्तं प्रयाति ॥१२॥
निर्विघ्नं तस्य विद्या प्रभवति सततं चाश्रुतग्रन्थबोधः ,
कीर्तिस्त्रैलोक्यमध्ये निवसति वदने शारदा तस्य साक्षात् ।
दीर्घायुर्लोकपूज्यः सकलगुणनिधिः सन्ततं राजमान्यो ,
वाग्देव्याःसम्प्रसादात् त्रिजगति विजयी जायते सत्सभासु ॥१३॥
ब्रह्मचारी व्रती मौनी त्रयोदश्यां निरामिषः ।
सारस्वतो जनः पाठात् सकृदिष्टार्थलाभवान् ॥१४॥
पक्षद्वये त्रयोदश्यामेकविंशतिसंख्यया ।
अविच्छिन्नः पठेद्धीमान् ध्यात्वा देवीं सरस्वतीम् ॥१५॥
सर्वपापविनिर्मुक्तः सुभगो लोकविश्रुतः ।
वाञ्छितं फलमाप्नोति लोकेऽस्मिन् नात्र संशयः ॥१६॥
ब्रह्मणेति स्वयं प्रोक्तं सरस्वत्याः स्तवं शुभम् ॥
प्रयत्नेन पठेन्नित्यं सोऽमृतस्वाय कल्पते ॥१७॥

इति श्रीमद्ब्रह्मणा विरचितं सरस्वती स्तोत्रं संपुर्णम् ॥